आनन्दाश्रमसंस्कृतग्र[illegible]ावलिः ।

ग्रन्थाङ्कः १६

श्रीमत्सुरेश्वराचार्यविरचितं

# [illegible]हदा[illegible]ण्यकोपनिषद्भाष्यवार्तिकम् ।

[illegible]गिरिकृतशास्त्रप्रकाशिका[illegible]यटीकासंवलितम् ।

( तत्र तृतीयाध्यायादारभ्य षष्ठान्त[illegible]तीयोऽन्त्यो भागः )

(प्रथमाध्यायादिषष्ठाध्यायान्तश्लोकाद्यचरणवर्णानुक्रमसहितः)

( बृहदारण्यकक्रमेण पञ्चमादारभ्याष्टमान्तः )

एतत्पुस्तकं वे० शा० रा० रा० काशीनाथ शास्त्री आगाशे इत्येतैः संशोधितम् ।

तच्च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रम[illegible]ालये

आयसा[illegible]

[illegible] ।

शालिवाहनशकाब्दाः १८१५

ख्रिस्ताब्दाः [illegible]



मूल्यं पादोनैकादश[illegible] ।

# अथ तृतीयोऽध्यायः ।

समाप्तो मधुकाण्डार्थो याज्ञवल्कीयकाण्डगः ॥
अतः परं प्रयत्नेन श्रुत्या व्याख्यायते स्फुटम् ॥ १ ॥

साक्षादेवापरोक्षं यदानन्दज्ञानमद्वयम् ।
अमृतं तदहं ब्रह्म सर्वस्यापि परायणम् ॥ १ ॥

प्रधानं मधुकाण्डं व्याख्याय युक्तिप्रधानं मुनिकाण्डमवतितारयिषुः संगति-
समाप्त इति । काण्डगोऽर्थ इति शेषः । प्रश्नप्रतिवचनाभ्यामसकृदुक्तिर्व्या-
पाचे प्रयत्नः । उक्तस्यैव पुनरुक्तौ फलमाह । स्फुटमिति ॥ १ ॥

याज्ञवल्कीयमेतस्मान्मधुकाण्डादनन्तरम् ॥
काण्डं विचारभूयिष्ठमधुनाऽऽरभ्यते परम् ॥ २ ॥

काण्डस्य पाश्चात्ये हेतुमाह । याज्ञवल्कीयमिति । प्रमाणोक्त्यनन्तरभाविनी
[1]क्तिस्तद्युक्तमागमयुक्तिप्रधानयोरनयोः पौर्वापर्यमित्यर्थः ॥ २ ॥

ननु पूर्वं य उक्तोऽर्थः स एवेहापि भण्यते ॥
पुनरुक्तं न च न्याय्यमेकप्रवचनस्थयोः ॥ ३ ॥

मिति परिह... पुनरुक्तिमविद्वानाशङ्कते । नन्विति । एकस्यैव
...काण्डभेदेनाप्युक्तौ को दोषस्तत्राऽऽह । पुनरुक्तमिति । द्वयोरपि
विशेषवशादेवापुनरुक्तिरिष्टाऽन्यथा सर्वशाखाप्रत्ययन्यायविरोधादेकशाखा-
काण्डयोरर्थभेदाभावे न युक्ता पुनरुक्तिरफलत्वादित्यर्थः ॥ ३ ॥

एकार्थत्वेऽपि च सति नैवास्य पुनरुक्तता ॥
याज्ञवल्कीयकाण्डस्य ह्युपपत्तिप्रधानतः ॥ ४ ॥

क्रमेन समाधिमाह । एकार्थत्वेऽपीति । प्रधानभूतोपपादकभेदादपौनरुक्त्यं प्रासि-
ति हिशब्दार्थः ॥ ४ ॥

आगमोक्तिप्रधानत्वं मधुकाण्डस्य वर्णितम् ॥
आगमार्थविशुद्ध्यर्थं युक्तीरत्र प्रवक्ष्यति ॥ ५ ॥

तुल्यं मधुकाण्डस्यापि तत्प्रधानत्वमित्याशङ्क्याऽऽह । आगमेति । कथमस्योपप
त्तिप्रधानतेत्यत आह । आगमेति ॥ ५ ॥

न चाऽऽगमस्य स्वातन्त्र्यं युक्त्युक्तेरपनुद्यते ॥
अर्थान्तरत्वाद्युक्तीनां प्रमाणेभ्यो यतस्ततः ॥ ६ ॥

१ ख. 'क्तिप्राधान्यो' ।

तर्हि युक्त्यपेक्षत्वादागमस्यानपेक्षत्वलक्षणप्रामाण्यक्षतिस्तत्राऽऽह । **न चेति** । यतस्ततो निरुच्यमानयुक्तीनाममानत्वादागमस्य तदपेक्षत्वेऽपि न स्वातन्त्र्यहानिरित्यर्थः ॥६॥

**सर्वप्रमाणशेषत्वं युक्तीनामुपवर्णितम् ॥**
**शास्त्रान्तरेष्वपि तथा नातः स्वातन्त्र्यखण्डनम् ॥ ७ ॥**

कथं तासाममानत्वमत आह । **सर्वेति** । उक्तं हि—अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति । **न्यायभाष्यकारो**ऽप्याह—तत्त्वविषयाभ्यनुज्ञालक्षणादूहाद्भावितात्प्रसन्नादनन्तरं प्रमाणसामर्थ्यात्तत्त्वज्ञानमुपपद्यत इति । **तद्वार्तिककारश्च** प्रमाणानि पुनः प्रवर्तमानानि तर्कविविक्तमर्थं यथाभूतमभिगमयन्तीति । **अन्योऽप्याह**—तया प्रमाणोपपत्त्येतिकर्तव्यतया प्रमाणविषयमभ्यनुजानन्त्या विशोधिते विषये प्रमाणं प्रत्यूहं प्रवर्तत इति । युक्तीनां प्रमाणशेषत्वे तदपेक्षागमस्य न स्वातन्त्र्यहानिरिति फलितमाह । **तथेति** । अतः सापेक्षत्वादित्येतत् ॥ ७ ॥

**पदार्थविषया चेयं युक्तिस्तर्कोऽभिधीयते ॥**
**वाक्यार्थस्त्वागमादेव निरपेक्षमतो वचः ॥ ८ ॥**

अस्तु वाऽनुमानान्तर्भावेन युक्तिर्मानं तथाऽपि नाऽऽगमस्य स्वातन्त्र्यभङ्गो विषयभेदादित्याह । **पदार्थेति** ॥ ८ ॥

**पौरुषेयवचःस्वेव युक्तेः प्राधान्यमिष्यते ॥**
**अनरोक्तौ तु तात्पर्यं युक्तेरर्थो न युक्तितः ॥ ९ ॥**

वेदवाक्यस्य स्वातन्त्र्ये हेत्वन्तरमाह । **पौरुषेयेति** । लौकिकवाक्येष्वाप्तानाप्तोक्तत्वादिसंशयनिरासित्वेन युक्तिं प्रधानीकृत्य प्रामाण्यं वेदवाक्येषु तु युक्त्या तात्पर्यनिश्चये तदनपेक्षमेवातः श्रुतिलिङ्गादियुक्त्यवगततात्पर्यस्य प्रत्यक्षादिविरोधनिरासद्वारा दृढीकरणं वाचारम्भणत्वादियुक्तिकृतमिति नाऽऽगमार्थे युक्तेः स्वतन्त्रतेत्यर्थः ॥ ९ ॥

**प्रत्यक्षाद्यतिवर्तित्वाद्युक्त्यपेक्षा न विद्यते ॥**
**आगमार्थे,यथैवं स्याद्युक्त्यर्थे नाऽऽगमेक्षणम् ॥ १० ॥**

किंच विमतं न युक्त्यपेक्षं प्रत्यक्षाद्ययोग्यत्वाद्धर्मवदित्यनुमानादैक्यागमस्यानपेक्षेत्याह । **प्रत्यक्षादीति** । स्वविषये युक्तेरागमापेक्षावत्तस्यापि स्वविषये युक्त्यपेक्षत्वं किं न स्यात्तत्राऽऽह । **यथेति** । न हि लोकसिद्धेऽर्थे वेदापेक्षेति भावः ॥ १० ॥

**पुंस्वभावानुरोधेन युक्तिर्वेदेऽभिधीयते ॥**
**आगमस्य प्रवृत्तिस्तु मेयवृत्त्यनपेक्षया ॥ ११ ॥**

वेदः स्वार्थे युक्त्यनपेक्षश्चेत्कथं तर्हि तत्र सोच्यते तत्राऽऽह । **पुंस्वभावेति** । अयं हि पुंस्वभावो यद्ब्रह्मात्मन्युक्तेऽप्यसंभावनादिद्वाराऽऽरोपितकर्तृत्वाद्यभिमानित्व

तन्निरासानुसारेण वेदे युक्तिरिष्टेत्यर्थः । ननु वेदस्यापि पुरुषबुद्ध्यनुरोधेन प्रवृत्तेस्तर्कादविशेषस्तत्राऽऽह । आगमस्येति । न हि वस्तु पुरुषोत्प्रेक्षामनुसरति क्षणिकत्वादेरपि वस्तुत्वप्रसङ्गादतः सिद्धमर्थमागमः स्वतोऽवगमयेदध्यक्षादिवदित्यर्थः ॥ ११ ॥

ननूक्ता मधुकाण्डेऽपि दुन्दुभ्याद्युपपत्तयः ॥
आगमैकप्रधानत्वं कथं तस्येति भण्यते ॥ १२ ॥

आगमप्रधानं मधुकाण्डमिदं तु युक्तिप्रधानमिति व्यवस्थया पुनरुक्तिसमाधिरुक्तः संप्रति व्यवस्थामाक्षिपन्पौनरुक्त्यतादवस्थ्यं शङ्कते । नन्विति ॥ १२ ॥

नैष दोषो यतस्तत्र युक्तीनामप्रधानता ॥
प्राधान्यं याज्ञवल्कीये युक्तीनामभिधीयते ॥ १३ ॥

पूर्वत्राऽऽगमप्राधान्याद्युक्तेर्गुणत्वादत्र च वैपरीत्यादुभयत्रोभयसत्त्वेऽपि न पौनरुक्त्यमित्याह । नेत्यादिना ॥ १३ ॥

युक्त्यागमौ हि संभूय करस्थामलकादिवत् ॥
सुसूक्ष्ममपि सद्वस्तु शक्तौ ज्ञापयितुं यतः ॥ १४ ॥

नन्वेवं पुनरुक्तिपरिहारेऽपि किमागमगम्येऽर्थे युक्त्युपन्यासेन न हि तामनुसृत्याऽऽगमः स्वार्थं प्रमापयेदत आह । युक्तीति । आगमिकेऽर्थे विपरीतभावनादिभञ्जकत्वेन युक्तीनामुपयोगाद्युक्ता तत्संगतिरिति हिशब्दार्थः ॥ १४ ॥

युक्तयोऽतोऽभिधीयन्ते पूर्वपक्षादिसंश्रयाः ॥
याज्ञवल्कीय एतस्मिन्काण्डे जल्पोक्तिवर्त्मना ॥ १५ ॥

काण्डारम्भमुपसंहरति । युक्तय इति । द्विविधा कथा जल्पो वादश्च तत्र जल्पद्वारा युक्तीरुक्त्वा तदनुसारेण तत्त्वं निर्णीयते पञ्चमेनेत्यध्यायार्थमाह । जल्पेति ॥ १५ ॥

उद्गीथप्रमुखा येऽर्था मधुकाण्डे पुरोदिताः ॥
तेषामेव विशुद्ध्यर्थं विचारः क्रियतेऽधुना ॥ १६ ॥

काण्डाध्यायारम्भमुक्त्वा भाष्योक्तमाख्यायिकासंबन्धं सिद्धवत्कृत्य ब्राह्मणस्य संगतिमाह । उद्गीथेति ॥ १६ ॥

दर्शनस्यास्य तेनात एकवाक्यत्वमिष्यते ॥
तथैवान्यपदार्थेषु तद्द्वयोरपि काण्डयोः ॥ १७ ॥

उद्गीथब्राह्मणोक्तवागादिस्वरूपनिरूपणार्थत्वादस्य ब्राह्मणस्यात्रत्यदर्शनस्य तत्रत्योपास्तिशेषत्वादनयोर्ब्राह्मणयोरेकवाक्यतेति फलितमाह । दर्शनस्येति । न केवलमाद्यब्राह्मणस्यैव पूर्वसंगतिरपि त्वन्येषामपीत्याह । तथैवेति । अन्यैर्ब्राह्मणैरुक्तार्थेषु तर्क-

१ ख. °क्षादीननु° ।

रूपेषु मधुकाण्डोक्ततत्त्वमाद्यर्थनिर्णयदृष्टेर्युक्तं तेषां पूर्वेणैकवाक्यत्वमित्यर्थः । काण्डयं द्वयोरेकवाक्यत्वं निगमयति । तदिति । तदा परामृष्टमेकवाक्यत्वम् ॥ १७ ॥

यदिदं कर्मणोऽशेषसाधनं मृत्युनाऽऽप्लुतम् ॥
स्वामिमन्त्रर्त्विगग्न्यादि त्वभिपन्नं वशीकृतम् ॥ १८ ॥

काण्डादिसंगतीरुक्त्वा पदार्थव्याख्यामारभते । यदिदमिति । आप्लुतं व्याप्तमिति यावत् । तस्य कर्मणःससाधनस्य कर्ता यजमानः केन मृत्योराप्तेर्मुक्तो भवतीति शेषः ॥ १८ ॥

परिच्छेदकृदज्ञानं सासङ्गं मृत्युसंज्ञितम् ॥
केनायं यजमानोऽतो मृत्योराप्तेर्विमुच्यते ॥ १९ ॥

को मृत्युर्येन ससाधनं कर्म संसृष्टं वशीकृतं च यस्य चाऽऽप्तेर्मुक्षेत्यत आह । परिच्छेदेति । ब्रह्मक्षत्रादिभेदकारणं भ्रान्तिज्ञानं रागादिसहितं मृत्युरित्यर्थः । केनेत्यादिवाक्यमादत्ते । केनेति ॥ १९ ॥

यन्मर्त्यसाधनं साध्यं मर्त्यं तदपि जायते ॥
साधनानुमितं साध्यं मुक्तिः केनात उच्यते ॥ २० ॥

यथोक्तमृत्युनाशे ससाधनं सर्वमेव कर्म त्यक्तं स्यान्न चानतिशयपुमर्थहेतुकर्मत्यागो युक्तस्ततो नायं प्रश्नो युज्यते तत्राऽऽह । यन्मर्त्येति । हेतोर्नाशित्वेऽपि फलस्यानाशित्वं मोक्षवदित्याशङ्क्याऽऽह । साधनेति । कारणानुसारित्वात्कार्यस्य मुक्तेश्चाकार्यत्वान्नाशित्वं साध्यस्यावश्यंभावीति भावः । सहेतुफलस्य कर्मणो नाशित्वेन त्याज्यत्वात्तद्व्यापकस्य मृत्योरत्ययोपायो वाच्य इति प्रश्नं निगमयति । मुक्तिरिति ॥ २० ॥

होत्रर्त्विजाऽग्निना वाचा मृत्योराप्तेर्विमुच्यते ॥
इति प्रश्नप्रतिवचो याज्ञवल्क्योऽप्युवाच तम् ॥ २१ ॥

परिहारमवतारयति । होत्रेति । तमित्यश्वलस्य निर्देशः ॥ २१ ॥

प्रवक्ता याज्ञवल्क्योऽत्र तं पृच्छन्त्यश्वलादयः ॥
सराजके समाजेऽयं विचारः क्रियते महान् ॥ २२ ॥

अथाश्वलो याज्ञवल्क्यं जेतुं जल्पेन प्रवृत्तस्तत्र तेनापि तेनैव च्छलादि प्रयोक्तुं युक्तमहृदयवाचामहृदया एव प्रतिवाचो भवन्तीति न्यायादतो यथातत्त्वं प्रतिवचनमनुचितं जल्पस्य तत्त्वनिर्णयफलत्वानुपपत्तेस्तत्राऽऽह । प्रवक्तेति । अत्रेति जल्पकथोक्तिः । विचारस्य महत्त्वं तत्त्वनिर्णयफलत्वम् । ज्ञानवतामेवाश्वलादीनां जयादिविवक्षया प्रश्नदर्शनादुत्तरत्र निग्रहोद्भावनाच्च भवत्येषा जल्पकथा साऽपि कदाचिन्महाजनपरिगृहीता

---

१ ख. नाशत्वे°।

तत्त्वनिर्णयं फलति। उक्तं हि—तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति। वात्स्यायनश्चाऽऽह—तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्तीति। अन्योऽप्याह—तत्त्वसंरक्षणार्थत्वान्नासदाचार इति। अतो वादवज्जल्पोऽपि कदाचित्तत्त्वनिर्णायक इति भावः ॥ २२ ॥

यजमानस्य येयं वाग्घोता चैतद्द्वयं यदा ॥
अधिदैवात्मना वेत्ति स होतैवंविधो भवेत् ॥ २३ ॥

वाग्वै यज्ञस्येत्यादेरर्थमाह। यजमानस्येति। अध्यात्मं यजमानस्य वागधियज्ञं होता चेति द्वयमग्निरूपेण यदा होता ध्यायति तदा स यजमानस्याऽऽत्मनश्च मृत्युनाशे हेतुः स्यादित्यर्थः ॥ २३ ॥

अनन्तविग्रहः सोऽग्निर्होता मृत्योर्यथोदितात् ॥
यजमानस्य मुक्तिः स्यादतिमुक्तिस्तथैव च ॥ २४ ॥

स मुक्तिरित्याद्यवतारयति। अनन्तेति ॥ २४ ॥

आसुरात्साधनादैवप्राप्तिर्मुक्तिरिहोच्यते ॥
साध्यादप्यासुरादैवसाध्याप्तिरतिमुक्तिता ॥ २५ ॥

मुक्तिपदार्थमाह। आसुरादिति। ज्ञानहीनात्केवलात्पापमिश्रिताद्वा पुण्यात्कर्मणः सूत्राद्याप्तिहेतोः समुच्चयस्याऽऽप्तिरत्र मुक्तिरित्यर्थः। अतिमुक्तिशब्दार्थमाह। साध्यादिति। आसुरसाधनफलात्स्वर्गादेर्दैवसाधनफलस्य सूत्रादेराप्तिरत्रातिमुक्तिरित्यर्थः ॥ २९ ॥

यथोक्तोपासनादेव कैवल्यं चेद्विवक्ष्यते ॥
ब्रह्मविद्या किमर्थेयं नान्यन्मुक्तेः फलं ततः ॥ २६ ॥

केचित्तु सूत्रोपास्तेः समुचितायाः साक्षान्मुक्तिरित्यस्मिन्नर्थे साऽतिमुक्तिरिति वाक्यं व्याचक्षते तान्प्रत्याह। यथेति। सा कर्मशेषतया तत्फलेति चेन्नेत्याह। नान्यदिति। ततो ब्रह्मविद्यावशादिति यावत्। विद्याकर्मणोः शेषशेषित्वं दूषितमिति भावः ॥ २६ ॥

आसुरात्कर्मणो मृत्योरतिमुक्तिरिहोदिता ॥
कालात्कर्मातिरेकेण मृत्योर्मुक्तिरिहोच्यते ॥ २७ ॥

यदिदमित्याद्युत्तरवाक्यतात्पर्यं वक्तुं वृत्तमनुवदति। आसुरादिति। उत्तरं वाक्यमवतारयति। कालादिति। कर्मणो मुक्तिरुक्ता चेत्कालादपि सोक्तैव तस्य कर्मान्तर्भावेन मृत्युत्वादित्याशङ्क्याऽऽह। कर्मेति ॥ २७ ॥

प्रयोगसमवाय्येव द्रव्यकर्त्रादिसाधनम् ॥
तत्प्रयोगावसाने च सर्वं तदपवृज्यते ॥ २८ ॥

---

१ क. तु।

तन्निरपेक्षतया कालस्य मृत्युत्वं वक्तुं भूमिकां करोति । **प्रयोगेति** । तस्य शेषिणो विनाशे स्वरूपेण सतोऽपि कर्त्रादेस्तच्छेषत्वनाशादपवर्गवाचोयुक्तिः ॥ २८ ॥

**प्रयोगावसितेस्तूर्ध्वं कालः प्राक्क प्रयोगतः ॥**
**क्षपयन्वर्ततेऽजस्रं सर्वं तत्कर्मसाधनम् ॥ २९ ॥**

कालस्य मृत्युत्वमुपपादयति । **प्रयोगावसितेरिति** ॥ २९ ॥

**तस्मात्कर्मातिरेकेण कालो मृत्युः प्रतीयताम् ॥**
**ततोऽपि मुक्तिर्वक्तव्येत्यत आरभ्यते परः ॥ ३० ॥**

तस्य तत्क्षपयितृत्वे फलितमाह । **तस्मादिति** । तस्य मृत्युत्वे सिद्धे किं जातं तदाह । **ततोऽपीति** । कर्मदृष्टान्तार्थोऽपिशब्दः ॥ ३० ॥

**कालश्च द्विविधः प्रोक्त एकोऽहोरात्रलक्षणः ॥**
**तिथ्यादिलक्षणश्चान्यस्ताभ्यां मुक्तिरिहोच्यते ॥ ३१ ॥**

उत्तरग्रन्थस्थप्रश्नयोर्विषयं भेत्तुं कण्डिकाद्वयमादत्ते । **कालश्चेति** ॥ ३१ ॥

**उपस्थापयतः कर्म तथा क्षपयतो यतः ॥**
**अहोरात्रे ततो मृत्युस्ताभ्यां मुक्तिः कुतो भवेत् ॥ ३२ ॥**

अहोरात्रयोर्मृत्युत्वोक्तिपूर्वकं ताभ्यां मुक्तिहेतुं पृच्छन्नाद्यं प्रश्नं विभजते । **उपस्थापयत इति** ॥ ३२ ॥

**अध्यात्मं चक्षुरध्वर्युरधियज्ञं द्वयं रविः ॥**
**साक्षादनन्तदेहोऽयमिति ध्यायन्विमुच्यते ॥ ३३ ॥**

परिहारतात्पर्यमाह । **अध्यात्ममिति** । यजमानस्याध्यात्मं चक्षुरधियज्ञमध्वर्युश्चेत्युभयमनवच्छिन्नः सवितैवेति साक्षाद्ध्यायन्नध्वर्युः स्वयमहोरात्राख्यान्मृत्योर्मुच्यते यजमानं च मोचयतीत्यर्थः ॥ ३३ ॥

**आत्मावयव एवायं सूर्यश्चक्षुर्ममांशुमान् ॥**
**अध्वर्युरहमेवेति साक्षात्कृत्वा विमुच्यते ॥ ३४ ॥**

चक्षुर्वै यज्ञस्येत्यादेस्तात्पर्यं वदन्नुक्तं व्यनक्ति । **आत्मेति** । ममाध्वर्योः संबधी योऽयमात्मा यजमानस्तदवयवश्चक्षुरहं चाध्वर्युरित्युभयमंशुमानेवेति साक्षाद्ध्यानं कृत्वा यदाऽध्वर्युस्तिष्ठति तदा यजमानोऽध्वर्युश्चाहोरात्राख्यमृत्योर्मुच्यत इत्यर्थः ॥ ३४ ॥

**कलावृद्धिक्षयाभ्यां तु पक्षयोरुभयोस्तथा ॥**
**चन्द्रः कर्तेह तत्प्राप्त्या पक्षाभ्यां विप्रमुच्यते ॥ ३५ ॥**

यदिदं सर्वं पूर्वपक्षेत्यादिप्रश्ने ब्रह्मणर्त्विजा मनसा चन्द्रेणेति माध्यंदिनश्रुत्या तावदु-

---

१ ख. च ।

त्तरमाह । कलेति । चन्द्रमसि वृद्धिह्रासयोर्भावात्पक्षयोरपि तयोः सत्त्वात्सादृश्यात्स तत्कर्ताऽतश्चन्द्रात्मना ब्रह्मणो मनसश्च ध्यानात्पक्षद्वयात्मकमृत्योर्यजमानो ब्रह्मा च मुच्यत इत्यर्थः ॥ ३९ ॥

ह्रासवृद्ध्योर्यतः कर्ता वायुश्चन्द्रमसस्ततः ॥
वायुनैवोपसंहारः प्राणोद्गात्रोरयं कृतः ॥ ३६ ॥

उद्गात्रर्त्विजा वायुना प्राणेनेति काण्वश्रुतेस्तात्पर्यमाह । ह्रासेति । सूत्रात्मवायुः स्वावयवस्य चन्द्रमसो वृद्ध्यादौ कारयिता तद्यजमानप्राणस्योद्गातुश्च वाय्वात्मनैवोपसंग्रहः काण्वश्रुतौ कृतोऽतो वाय्वात्मनैवोद्गात्रोर्ध्यानात्पक्षद्वयात्मकमृत्योरुद्गाता यजमानश्च मुच्यत इत्यर्थः ॥ ३६ ॥

मनोऽध्यात्मं यदस्याभूद्ब्रह्मा चैवाधियज्ञगः ॥
तस्याधिदेवता चन्द्र इति माध्यंदिनश्रुतिः ॥ ३७ ॥

किमिदं विरुद्धं ध्यानद्वयमनुष्ठेयमित्याशङ्क्य शाखाभेदेनोदितानुदितहोमवद्विकल्पमभिप्रेत्य कलावृद्धिक्षयाभ्यामित्यत्रोक्तं स्मारयन्नाह । मन इति ॥ ३७ ॥

कर्मतः कालतो मृत्योर्मुक्तोऽयं स्वर्गमेष्यति ॥
तं प्रयास्यति केनायमाक्रमेणेति पृच्छयते ॥ ३८ ॥

यदिदमन्तरिक्षमित्यादिप्रश्नं वृत्तमनूद्यावतारयति । कर्मत इति ॥ ३८ ॥

स्वर्गलोकगतावत्र साधनं पृच्छयते यतः ॥
अन्तरिक्षमनाधारं गतौ हेतुनिषेधनम् ॥ ३९ ॥

आक्रमशब्दार्थं दर्शयन्प्रश्नविषयं विशदयति । स्वर्गेति । तत्र हेतुः । यत इति । अन्तरिक्षमनाधारमिति गतौ हेतोर्निषेधनं यतो भात्यतो गतिसाधनप्रश्नमर्हतीति योजना ॥ ३९ ॥

न तु देहग्रहे प्रश्नः सति गन्तरि पृच्छयते ॥
अग्न्यादिदृष्टिभिश्चास्य देहः प्राक्प्रतिपादितः ॥ ४० ॥

भर्तृप्रपञ्चास्त्वारम्बणाक्रमणशब्दयोः शरीरविषयत्वमिच्छन्तो देहग्रहविषयमिमं प्रश्नं व्याचक्षते तान्प्रत्याह । न त्विति । तत्र हेतुः । सतीति । गन्तरि सत्येव केनेति पृच्छयते न च विना देहं गन्तृत्वमतो गतिबलात्तद्योग्यदेहलाभात्र तद्ग्रहे प्रश्नसिद्धिरित्यर्थः । किंच सोऽग्निरभवदित्यादिना चक्षुरादीनामग्न्यादिदृष्ट्या द्रष्टुर्देहस्योद्गीथब्राह्मणे सिद्धत्वाद्देहस्य द्रष्टृत्वायोगान्न तद्ग्रहे प्रश्न इत्याह । अग्न्यादीति ॥ ४० ॥

---

१ ख. ग. °भूद्ब्रह्मर्त्विग्योऽधि° । २ ख. °दिनी श्रु° । ३ ख. पृच्छति ।

तन्निरपेक्षतया कालस्य मृत्युत्वं वक्तुं भूमिकां करोति । प्रयोगेति । तस्य शेषिणो विनाशे स्वरूपेण सतोऽपि कर्त्रादेस्तच्छेषत्वनाशादपवर्गवाचोयुक्तिः ॥ २८ ॥

प्रयोगावसितेस्तूर्ध्वं कालः प्राक्प्रयोगतः ॥
क्षपयन्वर्ततेऽजस्रं सर्वं तत्कर्मसाधनम् ॥ २९ ॥

कालस्य मृत्युत्वमुपपादयति । प्रयोगावसितेरिति ॥ २९ ॥

तस्मात्कर्मातिरेकेण कालो मृत्युः प्रतीयताम् ॥
ततोऽपि मुक्तिर्वक्तव्येत्यत आरभ्यते परः ॥ ३० ॥

तस्य तत्क्षपयितृत्वे फलितमाह । तस्मादिति । तस्य मृत्युत्वे सिद्धे किं जातं तदाह । ततोऽपीति । कर्मदृष्टान्तार्थोऽपिशब्दः ॥ ३० ॥

कालश्च द्विविधः प्रोक्त एकोऽहोरात्रलक्षणः ॥
तिथ्यादिलक्षणश्चान्यस्ताभ्यां मुक्तिरिहोच्यते ॥ ३१ ॥

उत्तरग्रन्थस्थप्रश्नयोर्विषयं भेत्तुं कण्डिकाद्वयमादत्ते । कालश्चेति ॥ ३१ ॥

उपस्थापयतः कर्म तथा क्षपयतो यतः ॥
अहोरात्रे ततो मृत्युस्ताभ्यां मुक्तिः कुतो भवेत् ॥ ३२ ॥

अहोरात्रयोर्मृत्युत्वोक्तिपूर्वकं ताभ्यां मुक्तिहेतुं पृच्छन्नाद्यं प्रश्नं विभजते । उपस्थापयत इति ॥ ३२ ॥

अध्यात्मं चक्षुरध्वर्युरधियज्ञं द्वयं रविः ॥
साक्षादनन्तदेहोऽयमिति ध्यायन्विमुच्यते ॥ ३३ ॥

परिहारतात्पर्यमाह । अध्यात्ममिति । यजमानस्याध्यात्मं चक्षुरधियज्ञमध्वर्युश्चे[1]त्युभयमनवच्छिन्नः सवितैवेति साक्षाद्ध्यायन्नध्वर्युः स्वयमहोरात्राख्यान्मृत्योर्मुच्यते यजमानं च मोचयतीत्यर्थः ॥ ३३ ॥

आत्मावयव एवायं सूर्यश्चक्षुर्ममांशुमान् ॥
अध्वर्युरहमेवेति साक्षात्कृत्वा विमुच्यते ॥ ३४ ॥

चक्षुर्वै यज्ञस्येत्यादेस्तात्पर्यं वदन्नुक्तं व्यनक्ति । आत्मेति । ममाध्वर्योः संबंधी योऽयमात्मा यजमानस्तदवयवश्चक्षुरहं चाध्वर्युरित्युभयमंशुमानेवेति साक्षाद्ध्यानं कृत्वा यदाऽध्वर्युस्तिष्ठति तदा यजमानोऽध्वर्युश्चाहोरात्राख्यमृत्योर्मुच्यत इत्यर्थः ॥ ३४ ॥

कलावृद्धिक्षयाभ्यां तु पक्षयोरुभयोस्तथा ॥
चन्द्रः कर्तेह तत्प्राप्त्या पक्षाभ्यां विप्रमुच्यते ॥ ३५ ॥

यदिदं सर्वं पूर्वपक्षेत्यादिप्रश्ने ब्रह्मणर्त्विजा मनसा चन्द्रेणेति माध्यंदिनश्रुत्या तावदु-

[1] ख. च ।

त्तरमाह । कलेति । चन्द्रमसि वृद्धिह्रासयोर्भावात्पक्षयोरपि तयोः सत्त्वात्सादृश्यात्स तत्कर्ताऽतश्चन्द्रात्मना ब्रह्मणो मनसश्च ध्यानात्पक्षद्वयात्मकमृत्योर्यजमानो ब्रह्मा च मुच्यत इत्यर्थः ॥ ३५ ॥

**ह्रासवृद्ध्योर्यतः कर्ता वायुश्चन्द्रमसस्ततः ॥**
**वायुनैवोपसंहारः प्राणोद्गात्रोरयं कृतः ॥ ३६ ॥**

उद्गात्रर्त्विजा वायुना प्राणेनेति काण्वश्रुतेस्तात्पर्यमाह । ह्रासेति । सूत्रात्मवायुः स्वावयवस्य चन्द्रमसो वृद्ध्यादौ कारयिता तद्यजमानप्राणस्योद्गातुश्च वाय्वात्मनैवोपसंग्रहः काण्वश्रुतौ कृतोऽतो वाय्वात्मनैवोद्गात्रोर्ध्यानात्पक्षद्वयात्मकमृत्योरुद्गाता यजमानश्च मुच्यत इत्यर्थः ॥ ३६ ॥

**मनोऽध्यात्मं यदस्यार्भूद्ब्रह्मा चैवाधियज्ञगः ॥**
**तस्याधिदेवता चन्द्र इति माध्यंदिनश्रुतिः ॥ ३७ ॥**

किमिदं विरुद्धं ध्यानद्वयमनुष्ठेयमित्याशङ्क्य शाखाभेदेनोदितानुदितहोमवद्विकल्पमभिप्रेत्य कलावृद्धिक्षयाभ्यामित्यत्रोक्तं स्मारयन्नाह । मन इति ॥ ३७ ॥

**कर्मतः कालतो मृत्योर्मुक्तोऽयं स्वर्गमेष्यति ॥**
**तं प्रयास्यति केनायमाक्रमेणेति पृच्छ्यते ॥ ३८ ॥**

यदिदमन्तरिक्षमित्यादिप्रश्नं वृत्तमनूद्यावतारयति । कर्मत इति ॥ ३८ ॥

**स्वर्गलोकगतावत्र साधनं पृच्छ्यते यतः ॥**
**अन्तरिक्षमनाधारं गतौ हेतुनिषेधनम् ॥ ३९ ॥**

आक्रमशब्दार्थं दर्शयन्प्रश्नविषयं विशदयति । स्वर्गेति । तत्र हेतुः । यत इति । अन्तरिक्षमनाधारमिति गतौ हेतोर्निषेधनं यतो भात्यतो गतिसाधनप्रश्नमर्हतीति योजना ॥ ३९ ॥

**न तु देहग्रहे प्रश्नः सति गन्तरि पृच्छ्यते ॥**
**अग्न्यादिदृष्टिभिश्चास्य देहः प्राक्प्रतिपादितः ॥ ४० ॥**

भर्तृप्रपञ्चास्त्वारम्बणाक्रमणशब्दयोः शरीरविषयत्वमिच्छन्तो देहग्रहविषयमिमं प्रश्नं व्याचक्षते तान्प्रत्याह । न त्विति । तत्र हेतुः । सतीति । गन्तरि सत्येव केनेति पृच्छ्यते न च विना देहं गन्तृत्वमतो गतिबलात्तद्योग्यदेहलाभान्न तद्ग्रहे प्रश्नसिद्धिरित्यर्थः । किंच सोऽग्निरभवदित्यादिना चक्षुरादीनामग्न्यादिदृष्ट्या द्रष्टुर्देहस्योद्गीथब्राह्मणे सिद्धत्वाददेहस्य द्रष्टृत्वायोगान्न तद्ग्रहे प्रश्न इत्याह । अग्न्यादीति ॥ ४० ॥

---

१ ख. ग. 'भूद्ब्रह्मर्त्विग्योऽधि' । २ ख. 'दिनी श्रु' । ३ ख. पृच्छति ।

मनोऽधियज्ञं ब्रह्मैव ब्रह्मा चन्द्रोऽधिदैवतम् ।।
चन्द्रेण मनसा लोकमवष्टम्भेन यास्यति ।। ४१ ।।

परपक्षं निराकृत्य ब्रह्मणेत्यादिपरिहारतात्पर्यमाह । मन इति । यदध्यात्मं यजमानस्य मनस्तदधियज्ञमृत्विग्ब्रह्मैव स चाधिदैवश्चन्द्रोऽतश्चन्द्रात्मना दृष्टेन मनसा ब्रह्मणाऽवष्टम्भेन ब्रह्मलोकं यजमानो ब्रह्मा च प्राप्स्यतीत्यर्थः ॥ ४१ ॥

अध्यात्मं प्राण एव स्यादुद्गाता योऽधियज्ञगः ।।
स वायुरिति पाठे स्याद्व्याख्या माध्यंदिने त्वियम् ।। ४२ ।।

काण्वश्रुत्योत्तरमुक्त्वा माध्यंदिनश्रुत्याऽपि तदाह । अध्यात्ममिति । योऽध्यात्मं यजमानस्य प्राणः सोऽधियज्ञमुद्गाता स्यात्स च वायुरिति दृष्ट्या ब्रह्मलोकप्राप्तिरित्युद्गात्रर्त्विजा वायुना प्राणेनेति माध्यंदिनपाठे व्याख्या शाखाभेदेन च विकल्प इत्यर्थः ॥ ४२ ॥

यजमानश्रुतेरत्र पूर्वोद्गीथैकवाक्यतः ।।
यजमानो जपस्तत्र ज्ञानं नेत्यवसीयताम् ।। ४३ ।।

किमिदमुपास्तिजातं याजमानमार्त्विज्यं वेति वीक्षायामाह । यजमानेति । उद्गीथब्राह्मणे यजमानस्वामिकस्तत्कर्तृकश्च जपो ज्ञानं तु तत्स्वामिकमपि न तत्कर्तृकं किंत्वार्त्विज्यमित्युक्तं तथाऽत्रापि यजमानश्रुतेस्तत्स्वामिकमेव ज्ञानमृत्विक्कर्तृकमित्यवसेयमुद्गीथवाक्येनास्य वाक्यैकवाक्यत्वादित्यर्थः ॥ ४३ ॥

संभाव्यते न यत्तत्र यजमानस्य मानतः ।।
अस्तु कामं तदुद्गातुर्नतु तद्यजमानगम् ।। ४४ ।।

स्वसुवर्णादिज्ञानवदुद्गीथादिज्ञानमपि किमित्युद्गातृस्वामिकं न स्यादित्याशङ्क्याऽऽह । संभाव्यत इति । तत्रेत्युपासनान्युक्तानि तेषु यज्ज्ञानं सुवर्णादिविषयं यजमानस्य मानतोऽसंभावितं तदौद्गातृकमेव यत्तु यजमानगतमुद्गीथादिज्ञानं न तदार्त्विज्यमित्यर्थः ॥ ४४ ॥

इतीत्युक्तपरामर्शो ह्यतिदेशार्थ उच्यते ।।
इतोऽन्यत्रातिमोक्षा ये तेऽप्येवमिति वीक्ष्यताम् ।। ४५ ।।

प्रकृतज्ञानस्योद्गात्रादिकर्तृत्वं यजमानस्वामिकमित्युक्त्वोत्तरवाक्यस्थेतिशब्दार्थमाह । इतीत्युक्तेति । तत्फलं हिशब्दसूचितमाह । अतिदेशार्थ इति । अतिमोक्षा इत्यस्यार्थं वदन्नतिदेशप्रकारमाह । इतोऽन्यत्रेति । यथा वागादयोऽग्न्याद्यात्मना दृष्टा मृत्योरतिमोक्षहेतवस्तथाऽनुक्तास्त्वगादयोऽपि वाय्वादिरूपेण दृष्टास्तद्धेतवो द्रष्टव्या इत्यर्थः ॥ ४५ ॥

---

१ क. ख. तमाह । २ ख. ग. °नं पेत्य° ।

अधिदैवात्मना तेषां दृष्टयः साधनात्मनाम् ॥
अतिमोक्षाः स्युः सर्वत्र यथोक्तादेव लक्षणात् ॥ ४६ ॥

अतिदेशमेव प्रपञ्चयति । अधिदैवात्मनेति । यथा साधनरूपाणां वागादीनामग्न्यादिदेवतात्मना दृष्टयो मृत्युमतीत्य मोक्षहेतवस्तथा त्वगादिष्वपि सर्वेषु पूर्वोक्तवाग्वादिदेवतात्मत्वदर्शनादतिमोक्षाः स्युरित्यक्षरार्थः ॥ ४६ ॥

फलवत्कर्मणां क्वापि किंचित्सामान्यसंश्रयात् ॥
संपत्तिमर्हतां संपदल्पीयःकर्मसूच्यते ॥ ४७ ॥

उद्गीथोपास्तिशेषं निरूप्य साधनविशेषोक्तिप्रसङ्गेन संपदो निरूपयन्नथेत्यादौ संपत्पदार्थमाह । फलवदिति । महतां फलवतामश्वमेधादिकर्मणां कर्मत्वादिकिंचित्सादृश्यात्क्वाप्यल्पीयःस्वग्निहोत्रादिषु संपत्तिः संपदुच्यते यथाशक्त्यग्निहोत्रादिनिर्वर्तनेनाश्वमेधादीनि निर्वर्त्यन्ते मयेति ध्यानं संपदित्यर्थः ॥ ४७ ॥

यदि वा तत्फलस्यैव किंचित्सामान्यवर्त्मना ॥
संपादनं भवेत्संपदग्निहोत्रादिकर्मणि ॥ ४८ ॥

फलस्यैव वेति भाष्यार्थमाह । यदि वेति । अत्र तु सामान्यमग्रे स्फुटी भविष्यति ॥ ४८ ॥

संपदा चेत्फलप्राप्तिरश्वमेधादिकर्मणाम् ॥
त्रयाणामपि वर्णानां तत्पाठः फलवान्भवेत् ॥ ४९ ॥

कर्मणामेव बलवत्त्वं न संपदामतो न संपत्कार्येत्याशङ्क्याऽऽह । संपदेति । विहिताध्ययनस्यार्थज्ञानानुष्ठानादिपरंपरया फलवत्त्वमिष्टं न चाश्वमेधादिषु सर्वेषां त्रैवर्णिकानामनुष्ठानसंभवोऽतस्तेषां तदध्ययनार्थवत्त्वानुपपत्त्या संपदोऽपि फलसिद्धिरेष्टव्येत्यर्थः ॥ ४९ ॥

नातिभारोऽस्ति नो बुद्धेः शास्त्रं चेत्तत्परं भवेत् ॥
विदुषां श्रेयसेऽतोऽध्वा न क्वचित्प्रतिहन्यते ॥ ५० ॥

अश्वमेधादिफलस्य महतः संपदा कथमल्पीयस्या प्राप्तिरित्याशङ्क्याऽऽह । नेत्यादिना । संपच्छास्त्रं संपदाऽप्यश्वमेधादिफलाप्तिरित्यत्र तात्पर्यवच्चेत्तदा प्रतिपत्तॄणां शास्त्रार्थप्रतिपत्तौ न मनःखेदो युक्तः शास्त्रस्यानतिशङ्क्यत्वादित्यर्थः । अनुष्ठानसंपदोऽपि फलवत्त्वे फलितमाह । विदुषामिति । क्वचिदिति ब्राह्मणादीनामश्वमेधादिपाठो विवक्षितः ॥ ५० ॥

तिसृभिरिति संख्यार्थप्रश्ननिर्णयमब्रवीत् ॥
पुरोनुवाक्याद्युक्त्या तु संख्येयार्थविनिर्णयम् ॥ ५१ ॥

---

१ क. कारणात् ।

अथेत्यादि व्याख्याय कतिभिरित्यादिप्रश्नस्य कतमा इत्यादिप्रश्नस्य च पौनरुक्त्यं तिसृभिरित्याद्युत्तरस्य पुरोनुवाक्येत्यादेश्च पुनरुक्तिरित्याशङ्क्याऽऽह । **तिसृभिरितीति** ॥ ९१ ॥

**त्रैलोक्यसंख्यासामान्यात्स्यात्सर्वप्राणभृज्जयः ॥**
**सर्वप्राणभृतां यस्मात्त्रिष्वेवैतेषु संभवः ॥ ९२ ॥**

किं ताभिरिति प्रश्ने यत्किंचेत्यादि प्रतिवचनं तस्यार्थमाह । **त्रैलोक्येति** । त्रयो लोकास्त्रैलोक्यं तत्र भूरादौ त्रित्वसंख्याऽस्ति पुरोनुवाक्यादौ चातो लोकत्रयस्य तस्य च संख्यासादृश्यात्पुरोनुवाक्यादौ लोकत्रयं संपाद्य सर्वप्राणिजयः स्यादित्यर्थः । फलस्योपास्त्यनुसारितया लोकोपास्त्या तज्जयो युक्तो न सर्वप्राणिजय इत्याशङ्क्य लोकान्तर्भावात्प्राणिनां तज्जयो लोकजयान्नार्थान्तरमित्याह । **सर्वेति** ॥ ९२ ॥

**उज्ज्वलत्वादिसामान्याद्देवलोकादिसंपदः ॥**
**फलसंपद एवैता नात्र कर्म विवक्ष्यते ॥ ९३ ॥**

कर्मसंपत्फलसंपदिति द्वयी संपदनुक्रान्ता तत्र देवलोकमेवेत्यादौ कीदृशी संपदिष्टेति तत्राऽऽह । **उज्ज्वलत्वादीति** ॥ ९३ ॥

**दीप्तिर्नादोऽधःशयनमाज्यमांसपयोम्भसाम् ॥**
**देवलोकादिसंपत्स्याद्दीप्तिमत्त्वादिसंभवात् ॥ ९४ ॥**

तत्प्रपञ्चयति । **दीप्तिरिति** । आज्याहुतीनां दीप्तिर्मांसाद्याहुतीनां नादः पयःसोमाद्याहुतीनामधःशयनं देवपितृमनुष्यलोकेष्वपि दीप्तिमत्त्वादि संभवत्यतो घृताद्याहुतीषु देवलोकसंपन्मांसाद्याहुतीषु पितृलोकसंपत्सोमाद्याहुतीषु मनुष्यलोकसंपदेताः खल्वाहुतयो यदा निर्वर्त्यन्ते तदा लोका निष्पद्यन्त इत्यनुसंधानात्ततो लोकजयः स्यादित्यर्थः ॥९४॥

**वृत्त्यानन्त्यान्मनोऽनन्तं शब्दादीनामनन्ततः ॥**
**विश्वेदेवान्मनोवृत्तीः संपाद्याऽऽनन्त्यसाम्यतः ॥ ९५ ॥**
**अनन्तमेव तेनासौ सम्यग्ज्ञानेन विन्दति ॥**
**लोकं यथोक्तदृष्टिः सन्यजमानः फलं स्वयम् ॥ ९६ ॥**

अनन्तं वै मन इत्यस्यार्थमाह । **वृत्तीति** । वृत्त्यानन्त्ये हेतुः । **शब्दादीनामिति** । अनन्ता इत्यादेरर्थमाह । **विश्वेदेवानिति** । लोकशब्दार्थमाह । **फलमिति** । यजमानकर्तृकेयं दृष्टिरिति सूचयति । **स्वयमिति** । न च यजमानशब्दादङ्गावबद्धोपासनमिदमिति वाच्यं मनसः सर्वसाधारण्यादिति भावः ॥ ९५ ॥ ९६ ॥

**तिस्रः पुरोनुवाक्याद्या ऋचः पूर्वमुदीरिताः ॥**
**यास्ता एवात्र विज्ञेयाः स्तोत्रिया अपि नापराः ॥ ९७ ॥**

स्तोत्रियाः स्तोष्यतीत्यत्र स्तोत्रियशब्दार्थमाह । **तिस्र इति** ॥ ९७ ॥

**गीतयस्त्वधियज्ञं ता अध्यात्मं कास्तु ता इति ॥**
**प्राणापानव्यानरूपा अध्यात्मं ताः प्रचक्षते ॥ ९८ ॥**

कतमास्ता या अध्यात्ममित्यस्यार्थं प्रश्नरूपं प्रकटयति । **गीतयस्त्विति** । प्राण एवेत्यादेरर्थमाह । **प्राणेति** ॥ ९८ ॥

**जयो भूरादिलोकानां संख्यादित्वादिसाम्यतः ॥**
**अश्वलोऽप्युपरेमेऽथ स्वोक्तप्रश्नविनिर्णयात् ॥ ९९ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—५६८९ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य प्रथममश्वलब्राह्मणम् ॥ १ ॥**

किं ताभिरित्यादेरर्थमाह । **जय इति** । त्रित्वसाम्यादादित्वमध्यत्वान्त्यत्वसाम्यैश्च भूरादीन्पुरोनुवाक्यादिषु संपाद्य तया संपदा लोकजय इत्यर्थः । ततो हेत्यादेरर्थमाह । **अश्वलोऽपीति** । अपिस्तदौद्धत्यद्योती । स्वगोचरत्वं याज्ञवल्क्यस्य नास्तीतिज्ञानानन्तर्यमथशब्दार्थः ॥ ९९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्य प्रथममश्वलब्राह्मणम् ॥ १ ॥

---

अथ द्वितीयं ब्राह्मणम् ।

---

**मृत्योर्मुक्त्यतिमुक्ती द्वे पूर्वस्मिन्ब्राह्मणे गते ॥**
**मृत्युरूपावधृतये परं ब्राह्मणमुच्यते ॥ १ ॥**

वृत्तं कीर्तयति । **मृत्योरिति** । ब्रह्मक्षत्रादिपरिच्छेदहेतो रागादिसहितान्मिथ्याज्ञानात्कर्म तस्मादुपायोपेतात्कालाच्च मृत्योर्मुक्तिं व्याकुर्वता त्वमर्थशुद्धिर्विहितेत्यर्थः । आर्तभागब्राह्मणमवतारयति । **मृत्युरूपेति** ॥ १ ॥

**किंलक्षणेन ग्रस्तोऽयं मृत्युनेति प्रचोदिते ॥**
**ग्रहातिग्रहरूपेण ग्रस्तोऽयमिति कथ्यते ॥ २ ॥**

किं तन्मृत्यो रूपं यदवधारयितुमिष्टमित्याशङ्क्याऽऽकाङ्क्षापूर्वकमाह । **किमिति** ॥ २ ॥

**अधिभूताधियज्ञादिपरिच्छेदफलात्मकः ॥**
**मोहासङ्गास्पदो मृत्युर्ग्रहातिग्रहलक्षणः ॥ ३ ॥**

ग्रहादिरूपस्यापि मृत्योरसाधारणं रूपं वाक्यमिति चेत्तत्राऽऽह । **अधिभूतेति** । अध्यात्मादिपरिच्छेदकरः क्रियाकारकफलात्मको मोहनिमित्तरागाद्यवष्टम्भश्चेन्द्रियविषयरूपो यथोक्तो मृत्युरित्यर्थः ॥ ३ ॥

इतो मुक्तस्य रूपाणि त्वग्न्यादीनि पुराऽब्रवम् ॥
उद्गीथब्राह्मणे पूर्वमश्वलब्राह्मणे तथा ॥ ४ ॥

उक्तमृत्युग्रहग्रस्तत्वं प्रागेव देवतात्मेरित्याशङ्क्याग्न्यादीनामुत्पत्त्यादिमत्त्वादुक्तमृत्युग्रस्तताऽस्तीति मत्वोक्तं स्मारयति । इत इति । परिच्छेदाभिमानाद्यासङ्गपाप्मरूपान्मृत्योरित्यर्थः । पुरेत्युक्तिमेव व्यनक्ति । उद्गीथेति ॥ ४ ॥

फलं च ज्ञानयुक्तानां कर्मणामेतदिष्यते ॥
उत्पत्त्याद्यन्वयात्तस्मादनित्यं स्याद्घटादिवत् ॥ ५ ॥

अग्न्यादिभावस्य मृत्युग्रस्तत्वेऽपि समुच्चयफलस्य सूत्रस्य तदग्रस्तत्वात्तत्प्राप्तिरेव मुक्तिरिति व्यर्थः सम्यग्ज्ञानार्थं श्रम इत्याशङ्क्याऽऽह । फलं चेति । यद्धि समुच्चयफलमिष्टमेतच्च घटवदनित्यं जन्मादिमत्त्वात्तस्मान्न सूत्रप्राप्तिर्मुक्तिरित्यर्थः ॥ ५ ॥

अतो यथोक्तादेतस्मात्साध्यसाधनलक्षणात् ॥
संसाराद्बन्धनान्मोक्षः कर्तव्यो ज्ञानहेतुतः ॥ ६ ॥

अग्न्यादेस्तदात्मकसूत्रस्य च जगदात्मनो जन्माद्यन्वयान्मृत्युग्रस्तत्वे ज्ञानादज्ञाननिरासेन ततो मुक्तिः कार्येत्येतदर्थमेतद्ब्राह्मणमिति फलितमाह । अत इति ॥ ६ ॥

ज्ञानकर्मफलं दिव्यं यदि नाम पुरोदितम् ॥
ग्रहातिग्रहबन्धेन तथाऽपि सितमेव तत् ॥ ७ ॥

समुच्चयफलस्य सूत्रस्य मृत्युव्याप्त्या हेयत्वे हेत्वन्तरमाह । ज्ञानेति ॥ ७ ॥

वाङ्मनःप्राणरूपाणां त्र्यन्नात्मन्यपि संभवात् ॥
ग्रहातिग्रहरूपाणां नातो मुक्तः प्रजापतिः ॥ ८ ॥

कथं ग्रहादिरूपबन्धेन सूत्रस्य बद्धत्वं तत्राऽऽह । वागिति । सविषयाणां तेषां प्रजापतौ सत्त्वमेवातःशब्दार्थः ॥ ८ ॥

वागादयो ग्रहा ज्ञाताश्चतुष्ट्वं चाविवक्षितम् ॥
अतिमोक्षातिदेशोक्तेस्तद्विशेषोऽथ भण्यते ॥ ९ ॥

पूर्वब्राह्मणे कालादिरूपान्मृत्योरतिमुक्तिमुक्त्वा नेन ग्रहादिरूपेण मृत्युना सर्वस्य व्याप्तेस्ततो जगदात्मनो ब्रह्मादिस्तम्बान्तादतिमुक्तिर्वाक्यार्थान्वयिपदार्थशुद्धये वाच्येत्येतदर्थमेतद्ब्राह्मणमिति संगतिरुक्ता । संप्रति पदार्थव्याख्यामारभमाणो वाग्वै यज्ञस्येत्यादिना वाक्चक्षुर्घ्राणमनसां ग्रहाणां नामरूपगन्धकामानां चातिग्रहाणां तद्गतचतुष्टयस्य च प्रागेव प्राप्तेः कति ग्रहा इत्यादिप्रश्नस्याष्टावित्यादिप्रतिवचनस्य चानुपपत्तिमाशङ्क्य ग्रहातिग्रहाणां निर्ज्ञातत्वमङ्गी करोति । वागादय इति । तर्हि तद्गतत्वेन चतुष्ट्वसंख्याऽपि

१ ग. °दीनां पु° । २ ख. °व्योऽज्ञानहानितः । ३ क. त । ४ ख °बन्धने म° ।

ज्ञातैवेति कथं प्रश्नप्रत्युक्ती तत्राऽऽह । चतुष्टं चेति । पश्वेकत्ववच्चतुष्टयस्यापि विवक्षितत्वमाशङ्क्याऽऽह । अतिमोक्षेति । इत्यतिमोक्षा इति वागादावुक्तन्यायस्य त्वगाद्यतिदेशाद्ग्रहैकत्ववदविवक्षितं चतुष्टं युक्ता हि पशुना यजेतेत्यत्रोपादेयविशेषणत्वादेकत्वविवक्षा ग्रहं संमार्ष्टीत्यत्र तु ग्रहगतैकत्वं तदवच्छेदकत्वेनाविवक्षितमन्यथा ग्रहत्वैकत्वोद्देशेन संमार्गविधावुद्दिश्यमानयोर्मिथोऽसंबन्धात्प्रत्युद्देश्यं वाक्यसमाप्तौ ग्रहं संमार्ष्टि तं चैकमिति वाक्यभेदः स्यादतो ग्रहैकत्ववदिहापि चतुष्टाविवक्षेति भावः । ननु ज्ञातेषु ग्रहातिग्रहेषु न प्रश्नप्रतिवचने युक्ते तदविश्रान्तेरत आह । तद्विशेष इति । हेत्वर्थोऽथशब्दः । यतः सामान्यतो ज्ञाता ग्रहादयोऽतस्तेषु बुभुत्सितसंख्याविशेषनिरूपणार्थं प्रश्नादीत्यर्थः ॥ ९ ॥

**ग्रहा घ्राणादयो ज्ञेया गन्धाद्यास्तदतिग्रहाः ॥**
**ग्रहैर्गन्धादयो ग्रस्ता ग्रहाश्चाऽऽत्मा च गोचरैः ॥ १० ॥**

प्राणो वै ग्रह इत्यादेरर्थमाह । ग्रहा इति । ग्रहातिग्रहाणां ग्रहीतुश्च मिथोबद्धत्वमाह । ग्रहैरिति ॥ १० ॥

**अपानेनाऽऽहृतो गन्धो घ्राणस्यैति वशं यथा ॥**
**चक्षुरादिग्रहास्तद्वत्प्राणादिसचिवैरिह ॥ ११ ॥**

तदेव दृष्टान्तेन साधयन्नपानेनेत्यादेस्तात्पर्यमाह । अपानेनेति । अपश्वासप्रेरितो गन्धो यथा घ्राणस्य वशे वर्तते तथा रूपाद्यपि तत्तदनुरूपवायुप्रेरितं चक्षुराद्यधीनं तथा चक्षुरादिग्रहाः प्राणादिभिः सह रूपाद्यतिग्रहेषु वशवर्तिनो न च तेषां मिथोबद्धत्वेऽपि ग्रहीतृबद्धतां विना फलवत्तेति तेनापि ते बद्धा इत्यर्थः ॥ ११ ॥

**गन्धादिविषया धीस्थाः कर्मसंबोधिता यतः ॥**
**प्रयुञ्जते हि घ्राणादींस्ततस्ते स्युरतिग्रहाः ॥ १२ ॥**

प्राणादयो यद्यपि गृह्णन्तीति व्युत्पत्त्या भवन्ति ग्रहास्तथाऽपि कथं गन्धादीनामपि ग्रहत्वं तदाह । गन्धादीति । बुद्धौ खल्वनादिवासनारूढा विषयाः शुभेनाशुभेन कर्मणा प्रेरिताः स्वाकारधीसमुल्लासार्थं घ्राणादीन्प्रेरयन्ति तथाच ते ग्रहानतिक्रम्य स्ववशमानयन्तीत्यतिग्रहा इत्यर्थः । विषयाणामिन्द्रियप्रेरकत्वमनुभवसिद्धमिति हिशब्दार्थः ॥ १२ ॥

**योऽयं मृत्युरिह प्रोक्तो मृत्युस्तस्यापि चापरः ॥**
**अस्ति नास्तीति वा ब्रूहि याज्ञवल्क्य यथातथम् ॥ १३ ॥**

यदिदं सर्वं मृत्योरित्यादि व्याचष्टे । योऽयमिति ॥ १३ ॥

---

१ ख. °णादीनत° ।

अस्ति चेदनवस्था स्यादनिर्मोक्षो न चेद्भवेत् ॥
इति प्रतिवचः कष्टं मत्वैनं पर्यपृच्छत ॥ १४ ॥

प्रष्टुरभिप्रायमाह । अस्तीति । प्रश्नं निगमयति । इतीति ॥ १४ ॥

न कश्चिन्नियतो भावो मृत्युरित्युपदिश्यते ॥
विनाशको यतो मृत्युर्विनाश्यान्प्रति भण्यते ॥ १५ ॥

अग्निर्वै मृत्युरिति प्रत्युक्तिरयुक्ता मृत्युशब्दस्य वैवस्वते रूढेरित्याशङ्क्याऽऽह । नेति ॥ १५ ॥

मृत्योरपि सतो मृत्युरस्त्येवेति मयोच्यते ॥
न चानवस्थेहाऽऽप्नोति सर्वमृत्युत्वकारणात् ॥ १६ ॥

मृत्युशब्दस्याश्वकर्णादिवद्रूढ्यभावेऽस्ति तावदित्यादिभाष्यमुपपन्नमित्याह । मृत्योरिति । बाह्याध्यात्मकस्य मृत्योः सकारणस्याऽऽत्मैक्यसाक्षात्कारो मृत्युरित्यर्थः । मृत्योरपि मृत्युश्चेदनवस्थेत्युक्तमाशङ्क्याऽऽह । न चेति । आत्मसाक्षात्कारः सर्वं द्वैतं जग्ध्वा निरिन्धनाग्निवद्दाहकान्तरानपेक्षः शाम्यतीति नानवस्थेत्यर्थः ॥ १६ ॥

सर्वान्नभक्षणादग्निर्मृत्युस्तावदसावपि ॥
अपामन्नं भवन्दृष्टो बह्वीनां तनुविग्रहः ॥ १७ ॥

प्रत्युक्तितात्पर्यमुक्त्वा तदक्षराणां यथाश्रुतमर्थमाह । सर्वान्नेति ॥ १७ ॥

अग्निर्हिरण्यगर्भो वा ह्यापस्तत्कारणं मताः ॥
कार्याणां मारणान्मृत्युः कारणं प्रथितं भुवि ॥ १८ ॥

अग्नेरपां मृत्युत्वे कथं ज्ञानस्य मृत्योर्मृत्युत्वमित्याशङ्क्यार्थान्तरमाह । अग्निरिति । अपां हिरण्यगर्भं प्रति कारणत्वमप एव ससर्जाऽऽदौ तासु वीर्यमवासृजदित्यादौ प्रसिद्धमिति हिशब्दार्थः । सूत्राव्याकृतयोर्मृत्युत्वे हेतुमाह । कार्याणामिति । यद्वा भवत्वव्याकृताख्यानामपां सूत्राख्यहिरण्यगर्भं प्रति कारणत्वं तथाऽपि कथं तन्मृत्युत्वमित्याशङ्क्याऽऽह । कार्याणामिति ॥ १८ ॥

प्रत्यग्याथात्म्यविज्ञानं मृत्युरज्ञानरूपिणः ॥
संसारहेतोर्मृत्योः स्यान्नापीहास्त्यनवस्थितिः ॥ १९ ॥

अव्याकृतस्य मृत्युरस्ति चेदनवस्था नास्ति चेदनिर्मुक्तिरितिचोद्यतादवस्थ्यमाशङ्क्याऽऽह । प्रत्यगिति ॥ १९ ॥

निरुणद्धि यथा जन्म तन्नाशमपि तत्तथा ॥
प्रत्यग्याथात्म्यविज्ञानं नानवस्थाऽप्यतो भवेत् ॥ २० ॥

यद्यपि ज्ञानमज्ञानं तत्कार्यं स्वात्मानं च निवर्तयति तथाऽपि निवृत्तेरात्मनोऽर्थान्तरत्वान्निवर्तकान्तरापेक्षेति तदवस्थाऽनवस्थेत्याशङ्क्याऽऽह । निरुणद्धीति । तद्विज्ञानं

सर्वजन्मनाशादि सनिदानं बन्धनमात्मतया निवर्तयन्निवृत्तिमपि तन्मात्रमापादयतीति नानवस्थेत्यर्थः ॥ २० ॥

अन्येऽतो मृत्यवो गौणास्तैर्मृतौ स्यात्पुनर्जनिः ॥
प्राक्तनान्यपि जन्मानि सम्यग्ज्ञानं तु हन्ति नः ॥ २१ ॥

सूत्रमव्याकृतं तत्त्वधीर्यमादयश्चेति मृत्यूनां भेदादेकस्य शब्दस्यानेकार्थत्वमन्याय्यमित्याशङ्क्याऽऽह । अन्य इति । तेषां गौणमृत्युत्वे हेतुमाह । तैरिति । सम्यग्धियो मुख्यमृत्युत्वे युक्तिमाह । प्राक्तनानीति । कालत्रयवर्तिनामपि जन्मनां तन्निदाननिरासेन निरासाद्युक्तं सम्यग्धियो मुख्यमृत्युत्वमित्यर्थः ॥ २१ ॥

यथोक्त एव व्याख्याने युक्तेयं स्यात्फलश्रुतिः ॥
न तु निःशेषसंसारविध्वंसिन्यात्मबोधने ॥ २२ ॥

ज्ञानपदमध्याहृत्य कुतो व्याख्यायतेऽध्याहारप्रापकाभावादित्याशङ्क्याप पुनरित्यादिफलश्रुतिस्तत्प्रापिकेत्याह । यथेति । ज्ञानपदमध्याहृत्य व्याख्यायामेव सा युक्तेत्यत्र हेतुमाह । न त्विति । एवंविधात्मबोधे सति यतो नास्ति मृत्युरतो युक्ता फलश्रुतिरित्यर्थः । यद्वा यथाश्रुतव्याख्याने ज्ञानपदाभावादयुक्तैव फलश्रुतिः स्यादिति पूर्वार्धार्थः । तैवत्पक्षे वा कथं तदुपपत्तिरित्याशङ्क्याऽऽह । न त्विति । उक्तात्मबोधेऽध्याहृते फलश्रुतिर्नायुक्ता सति तस्मिन्मृत्य्वन्तराभावादित्यर्थः ॥ २२ ॥

समस्तमृत्योस्तमसः सम्यगात्मावबोधनम् ॥
मृत्युस्तत्फलविज्ञप्त्यै परो ग्रन्थोऽवतार्यते ॥ २३ ॥

• यदिदमित्यादि व्याख्याय यत्रायमित्यादेस्तात्पर्यमाह । समस्तेति । यद्यपि सम्यग्ज्ञानस्याप पुनर्मृत्युं जयतीति फलमुक्तं तथाऽपि तद्विशदीकरणार्थमुत्तरं वाक्यमित्यर्थः ॥ २३ ॥

सम्यग्ज्ञातात्मयाथात्म्यो यदाऽयं म्रियते पुमान् ॥
किमुत्क्रामन्त्यतः प्राणा उताहो नेति भण्यताम् ॥ २४ ॥

तत्र प्रश्नाक्षराणि व्याचष्टे । सम्यगिति । यदेति प्रारब्धकर्मावसानदशोच्यते । पुमानेवातःशब्दार्थः ॥ २४ ॥

उत्क्रान्तौ स्यादनिर्मोक्षो जन्मार्थं मरणं यतः ॥
अमृतिश्चाप्यनुत्क्रान्तौ सत्सु प्राणेषु का मृतिः ॥ २५ ॥

प्रष्टुरभिप्रायमाह । उत्क्रान्ताविति । जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेति स्मृतेरित्यर्थः । द्वितीये मृतिप्रतीतिविरोधमाह । अमृतिश्चेति ॥ २५ ॥

---

१ ख. तत्पदे ।

दुःशकोत्तरमित्येवं प्रश्नं मत्वाऽन्वपृच्छत ॥
आर्तभागो मुनिर्विद्वान्स च नेति तमब्रवीत् ॥ २६ ॥

प्रश्नं निगमयति । दुःशकेति । जल्पवृत्तिं सूचयितुं विद्वानिति प्रष्टुर्विशेषणम् । प्रत्युक्तिमवतारयति । स चेति ॥ २६ ॥

अकर्त्रात्मपरिज्ञानाद्ध्वस्ताविद्यस्य सर्वतः ॥
देहान्तरग्रहाभावात्प्राणोत्क्रान्तेरसंभवः ॥ २७ ॥

तस्यास्तात्पर्यमाह । अकर्त्रात्मेति ॥ २७ ॥

यदैव सम्यग्विज्ञानं जातमस्याऽऽगमोक्तितः ॥
प्राणाः सहेतवः सर्वे तदैवास्ता निरन्वयाः ॥ २८ ॥

विदुषो हेत्वभावाद्देहान्तरग्रहाभावेऽपि सतां प्राणानामुत्क्रान्त्या भाव्यमित्याशङ्कयाऽऽह । यदेति । हेतवः कामकर्मादयोऽन्वयो मूलकारणमविद्या ॥ २८ ॥

नान्वयं सहते प्रत्यङ्न चापि व्यतिरेकताम् ॥
कौटस्थ्यैकत्वहेतुभ्यां प्रत्यग्याथात्म्यवस्तुनः ॥ २९ ॥

आत्मनो वाक्यीयज्ञानादूर्ध्वं सप्रयोजकानां समूलानां प्राणानां ध्वस्तिश्चेत्प्राक्तैरभेदो भेदो वाऽऽत्मनि स्यादित्याशङ्कयाऽऽह । नेत्यादिना । न तावत्प्रतीचोऽस्ति प्राणैः सहैकत्वं कूटस्थत्वाद्विकारिभिरैक्यायोगान्नापि भिन्नत्वमद्वितीयत्वादतो ध्वंसात्प्रागनिर्वाच्यतैव तेषामित्यर्थः ॥ २९ ॥

ध्वस्तध्वान्तस्य विज्ञानादतो हेतुफलात्मनाम् ॥
दृशौ स्यात्समवनयः सर्पादीनां यथा स्रजि ॥ ३० ॥

अत्रेत्यादेरर्थमाह । ध्वस्तेति । पञ्चम्यौ समानाधिकरणे । समवनयो लयः ॥३०॥

न स्वकारणसंसर्गस्तस्य ज्ञानादपह्नुतेः ॥
निष्फलं च भवेज्ज्ञानं यदि कारणसंगतिः ॥ ३१ ॥

स कार्याणां प्राणादीनां स्वकारणे भवतीति कुतो दृशाविति विशेषणमित्याशङ्कयाऽऽह । नेत्यादिना । ज्ञाने सत्यज्ञानस्य ध्वंसान्न तत्र प्राणादिसंसर्गाख्यो लयः संभवतीत्यर्थः । किंच सति ज्ञाने कार्याणां कारणसंसर्गश्चेत्ताद्विनाऽपि तत्संभवाज्ज्ञानवैयर्थ्यमाह । निष्फलं चेति ॥ ३१ ॥

उत्क्रामन्ति न चेत्प्राणा नायं तर्हि मृतो भवेत् ॥
देहस्यैव मृतेर्नैवं जीवो न म्रियते सदा ॥ ३२ ॥

स उच्छ्वयतीत्यादेर्व्यावर्त्यां शङ्कामाह । उत्क्रामन्तीति । किं जीवमरणेन प्राणो-

१ ग. °स्वा त्वपृ° । २ ख. यदैवं ।

क्रान्तिः साध्यते किंवा प्राणानुत्क्रान्त्या जीवमरणप्रसिद्ध्यनुपपत्तिश्चोद्यत नाऽऽद्य त्याह । देहस्येति ॥ ३२ ॥

जीवापेतमिति श्रुतेर्जन्मादेश्च निषेधतः ॥
यत्संबन्धादचित्कोऽपि जीवतीत्यभिधीयते ॥ ३३ ॥
देहस्तस्य कथं मृत्युर्जीवस्येहोपपद्यते ॥
यतोऽतो देहमरणं मात्यक्ष्यादुपपद्यते ॥ ३४ ॥

तत्र श्रुतिं प्रमाणयति । जीवेति । न स्वतो जीवस्य जन्मनाशावित्येतच्चिन्तितं नाऽऽत्माऽश्रुतेरित्यत्रेति वक्तुं हीत्युक्तम् । तत्रैव श्रुतार्थापत्तिमाह । जन्मादेरिति । जीवस्य श्रुतिस्मृत्योरिति शेषः । अमरणे युक्तिं समुच्चिनोति । यदिति । न द्वितीयो जीवस्यामृतेस्तन्मृतिप्रसिद्धेरौपाधिकत्वाच्चराचरव्यपाश्रयस्तु स्यादिति न्यायादित्यभिप्रेत्य प्रकृतवाक्यं प्रत्यक्षसिद्धदेहमरणानुवादकमित्याह । यत इति ॥ ३३ ॥ ३४ ॥

प्राणा एव विलीयन्ते किंवाऽन्यदपि कृत्स्नतः ॥
प्रयोजकादि निःशेषं म्रियमाणाद्विपश्चितः ॥ ३५ ॥

किमित्यादेरर्थमाह । प्राणा इति । किमेनमित्यादि स्फोरयति । प्रयोजकादीति । प्रयोजकाः कामादय आदिशब्देन प्रयोज्यराशिरुक्तः ॥ ३५ ॥

प्राणमात्रविनाशे स्याद्भूयो जन्म प्रयोजकात् ॥
सप्रयोजकतन्नाशे मुक्तिरस्योपपद्यते ॥ ३६ ॥

तत्राऽऽद्ये दोषमाह । प्राणेति । द्वितीयं प्रत्याह । सप्रयोजकेति । तत्र प्राणविशेषणासिद्धिरिति भावः ॥ ३६ ॥

किमेनं न जहातीति पृष्टो नामेत्यथाब्रवीत् ॥
न किंचिन्न जहातीति प्रसिद्धेरिदमुच्यते ॥ ३७ ॥

प्रत्युक्तिमादत्ते । किमिति । प्रश्नस्य प्रतिवचनप्रवृत्तिहेतुत्वमथशब्दार्थः । तस्यास्तात्पर्यमाह । न किंचिदिति । कथमयमर्थोऽस्मिन्वाक्ये भात्यत आह । प्रसिद्धेरिति ॥ ३७ ॥

नाममात्रावशेषं तदित्युक्तौ गम्यते यतः ॥
न किंचिदवशिष्टं स्यादिति यद्वत्तथेह तत् ॥ ३८ ॥

तामेव प्रकटयति । नामेति । तत्पुत्रक्षेत्रादि नाममात्रावशेषमिति लौकिकोक्तौ नावशिष्टं किंचिदिति यथा गम्यते तथाऽत्रापि वाक्ये नाममात्रं म्रियमाणं विद्वांसं न जहातीत्युक्ते न किंचिदवशिष्टमिति स्याद्दृष्टिरतो युक्ता प्रत्युक्तिरित्यर्थः ॥ ३८ ॥

शब्दार्थश्चाऽऽकृतिर्यस्मान्नातो नाम विनश्यति ॥
आनन्त्यं नित्यतैवास्य नाम्नो न व्यक्तिभूरिता ॥ ३९ ॥

विदुषो नामावशेषे हेतुरनन्तं वै नामेति तस्यार्थमाह । शब्देति । आकृतेः शब्दार्थत्वं तृतीये व्युत्पादितम् । अनन्तशब्दान्नाम्नो व्यक्तिप्राचुर्ये दृश्यमाने कुतो नाम नित्यमित्याशङ्क्याऽऽह । आनन्त्यमिति । व्यक्तिभेदस्य प्रसिद्धत्वान्न तद्वक्तव्यं ब्रह्मविदः स्वदृष्ट्या नामापि न शिष्यते परदृष्ट्या तदवशेषोक्तिः शुको मुक्तो वामदेवो मुक्त इत्यादिदर्शनादतो नामनित्यत्वं व्यावहारिकमिति भावः ॥ ३९ ॥

मृत्योः प्रयोजकं यत्स्याद्ग्रहातिग्रहरूपिणः ॥
तत्स्वरूपावधृतये प्रारब्धैषोत्तरा श्रुतिः ॥ ४० ॥

यत्रास्येत्यादेस्तात्पर्यमाह । मृत्योरिति ॥ ४० ॥

वैश्वानरवरादत्र केचिदाहुर्महाधियः ॥
देहद्वयविमोकेऽपि नैव मुक्तः पुमानिति ॥ ४१ ॥

किमित्यादिवाक्यस्य व्याख्यामुक्त्वा यत्रेत्यादेस्तात्पर्यं चोक्तमिदानीं भर्तृप्रपञ्चप्रस्थानमुत्थापयति । वैश्वानरेति । अत्र किमेनमित्यादाविति यावत् । किमाहुरित्यपेक्षायां तत्प्रक्रियामाह । देहेति ॥ ४१ ॥

नाममात्रावशेषोऽसावन्तरालेऽवतिष्ठते ॥
परात्मनः परिच्छिन्नोऽविद्ययोषररूपया ॥ ४२ ॥

समुच्चयानुष्ठानाद्देहयोर्नाशेऽपि पुमान्मुक्तो नेति वदन्ति चेत्तर्हि तस्य बद्धत्वायोगात्कामसौ दशामवलम्बतेऽत आह । नामेति । अन्तरालस्थितिं स्फुटयति । परात्मन इति ॥ ४२ ॥

उच्छिन्नकामकर्माऽसौ कृत्स्नतत्फलभोगतः ॥
उच्छिन्नाशेषबुद्ध्यादिस्तत्कारणपरिक्षयात् ॥ ४३ ॥

क्षितेरूषरवदवस्थितात्माविद्यया परस्मात्परिच्छिन्नश्चेदात्मा तर्हि बद्ध एव स्यादित्याशङ्क्याऽऽह । उच्छिन्नेति । तदुच्छेदोपायमाह । कृत्स्नेति । सर्वस्य कर्मादिफलस्य सूत्रात्मना समुच्चयासादितस्य भोगादप्राप्तार्थाभावात्कामासिद्ध्या कर्माभावात्प्रयोजकराशेरुच्छित्तिरित्यर्थः । तथाऽपि बुद्ध्यादिमत्त्वेन बद्धत्वान्नान्तराले स्थितिरित्याशङ्क्याऽऽह । उच्छिन्नेति । तस्योच्छिन्नत्वे तद्धेतोर्देहद्वयस्य प्रयोजकस्य ध्वस्तत्वं हेतुमाह । तदिति ॥ ४३ ॥

अद्वैतदर्शनेनास्य द्वैतदृष्ट्यपनुत्तये ॥
पर आरभ्यते ग्रन्थो ब्रह्मविद्यावबुद्धये ॥ ४४ ॥

१ ख. 'तैव स्यान्नाऽऽत्मनो व्य' । २ क. ख. बन्धपक्षस्यैव ।

किमेनमित्यादावान्तरालावस्थस्य विद्याधिकारिणो निर्धारणात्तदपेक्षितपरविद्याशेषत्वेनोत्तरग्रन्थारम्भं संभावयति । अद्वैतेति । तर्हि यत्रोषस्तप्रश्नादौ ब्रह्मविद्योच्यते तस्यैवाऽऽरम्भो युक्तो यत्रास्येत्यादिस्तु वृथेत्याशङ्क्याऽऽह । ब्रह्मेति । फलवद्विद्याप्राप्तिशेषत्वेन निवर्त्यग्रहाद्यात्मकमृत्युप्रयोजकनिर्धारणार्थो यत्रेत्यादिग्रन्थ इत्यर्थः ॥४४॥

अत्र यत्प्रतिवक्तव्यं तदुक्तमसकृत्पुरा ॥
जिहेम्यत्र पुनर्वक्तुं पुनरुक्तगिरा भृशम् ॥ ४५ ॥

आत्मानमेवेत्यादौ भर्तृप्रपञ्चनिराकरणे यथोक्तार्थस्य निराकृतत्वान्न पुनस्तन्निरासाय प्रयतितव्यमित्याह । अत्रेति ॥ ४५ ॥

भाष्योपात्तमतो ब्रूमो नानुपात्तं कथंचन ॥
पिष्टपेषणवत्सर्वं पूर्वपक्षोक्तिदूषणम् ॥ ४६ ॥

तर्हि श्रुतिव्याख्यानमेवानुवर्त्यतामित्याशङ्क्य कर्तव्यान्तरमाह । भाष्येति । पूर्वपक्षभूतासु परोक्तिषु दूषणं सर्वं पूर्वमेवोक्तमिति पुनरुच्यमानं पिष्टपिष्टिवद्यतो भवत्यतो भाष्योक्तं दूषणं कथमपि न ब्रूमः किंतु तेनानुक्तं भर्तृप्रपञ्चभाष्योक्तं तैः स्वदोषत्वेनाज्ञातं तद्दूषणमपूर्वं वर्णयाम इत्यर्थः ॥ ४६ ॥

द्वैतदृष्ट्यैव निःशेषद्वैतकार्यपरिक्षयात् ॥
न भूतमात्रोपादाने बीजमस्ति मनागपि ॥ ४७ ॥

किं तर्हि तदपूर्वं दूषणमित्याशङ्क्य पूर्वपक्षोक्तं वक्तुमुत्तरग्रन्थावतितारयिषया परोक्तां शङ्कामाह । द्वैतेति । समुच्चयानुष्ठानाद्द्वैतकार्यस्य कर्मादेः सर्वस्य ध्वस्तेर्देहारम्भकभूतमात्राणां स्वीकारे न किंचिन्निमित्तमस्ति द्वैतदर्शनेन कृत्स्नद्वैतकार्यमुच्छिन्नं न भूतमात्रोपादाने बीजमिति हि तैरुक्तमित्यर्थः ॥ ४७ ॥

पुमर्थावसितेः शास्त्रं कृतार्थं विनिवर्तते ॥
अद्वैतदर्शनेनातो नास्ति किंचित्प्रयोजनम् ॥ ४८ ॥

आद्यसमुच्चयफलतया सर्वसंसारध्वंससिद्धेर्निराकाङ्क्षं शास्त्रं नाद्वैतधियं प्रसूते तेनैवापवृक्तः पुरुषः कृतार्थः शास्त्रान्नेदानीमद्वैतदर्शने प्रयोजनमस्तीति हि वदन्तीत्याह । पुमर्थेति ॥ ४८ ॥

अद्वैतदर्शनार्थाय शास्त्रारम्भोऽत एव च ॥
नैवोपपद्यते कृत्स्नपुरुषार्थावसानतः ॥ ४९ ॥

एवं सत्युत्तरानारम्भफलमाह । अद्वैतेति । शास्त्रं कहोलप्रश्नादि । कृत्याभावोऽतःशब्दार्थः । तमेव स्पष्टयति । कृत्स्नेति । द्वैतदर्शनेनैवेति शेषः ॥ ४९ ॥

उपपन्नस्तदारम्भो मिथःकार्यपृथक्त्वतः ॥
द्वैताद्वैतात्मसंदृष्ट्योर्दन्तोलूखलयोरिव ॥ ५० ॥

तदीयं सिद्धान्तमाह । उपपन्न इति । प्रस्तुतशास्त्रविषयस्तच्छब्दः । कार्यभेदे दृष्टान्तः । दन्तेति । न हि दन्तकार्यं चर्वणाद्युलूखलनिर्वर्त्यं नापि तत्कार्यमवघातादीतरोत्पाद्यं तथाऽनयोर्दृष्ट्योरिति युक्तं कार्यपृथक्त्वमित्यर्थः ॥ ९० ॥

आसङ्गकार्यमुच्छिन्नं द्वैतदृष्ट्याऽऽत्मनो यतः ॥
आसङ्ग एव भूतानामुपादानमिहेष्यते ॥ ९१ ॥

द्वैतदृष्टेस्तर्हि किं पृथक्फलमित्याशङ्क्य द्वैतदर्शनेनाऽऽसङ्गकार्यमुच्छिन्नमितिभाष्यार्थमाह । आसङ्गेति । अतः कार्यध्वस्तेस्तद्धेत्वासङ्गस्यापि ध्वस्तिरिति शेषः । तद्ध्वस्तौ फलं वदन्नासङ्ग उपादानं भूतानामित्यस्यार्थमाह । आसङ्ग इति । भूतानां देहारम्भकाणामिति यावत् । उपादानं ग्रहणकारणमित्यर्थः । इहेति स्वपक्षोक्तिः । तथाचाऽऽसङ्गोच्छेदे नास्ति तदुपादानमित्यर्थः ॥ ९१ ॥

स एष द्वैतदृष्ट्याऽत्र कर्मपक्षो निराकृतः ॥
कामश्च वासनाः सर्वा माहारजनपूर्विकाः ॥ ९२ ॥

स एष कामपक्ष उच्छिन्नः कामश्च कर्मपक्षस्यैवेत्यादिभाष्यादुक्तमेव व्यनक्ति । स एष इति । अत्र प्रतीचीत्येतत् । कामकर्मवासनानां सकार्याणां ध्वस्तिराद्यसमुच्चयफलमित्यर्थः ॥ ९२ ॥

सर्वं चेद्विनिवृत्तं स्यात्किमन्यदवशिष्यते ॥
तत्परिच्छेदि विज्ञानमविद्यैवावशिष्यते ॥ ९३ ॥

द्वैतदृष्ट्या सर्वं कामाद्युच्छिन्नं चेदद्वैतदृष्टेर्निवर्त्याभावाद्वैफल्यमिति शङ्कते । सर्वं चेदिति । यथाऽऽहुः—विज्ञानात्मनः किमवशिष्यत इति । विज्ञानमवशिष्यत इति भाष्येणोत्तरमाह । तदिति । तस्य जीवस्य परस्मात्परिच्छेदकं ज्ञानमवशिष्टं तदद्वयदृष्टिनिरस्यमित्यर्थः । किं पुनर्विज्ञानं तदाह । अविद्येति ॥ ९३ ॥

कर्माऽऽरम्भे विकर्त्रेव स्वाश्रयस्य सदेष्यते ॥
इयत्ता कारकावस्था परिच्छिज्ज्ञानमेव तु ॥ ९४ ॥

कर्मादेरविद्यायाश्च कार्यतो भेदाभावमाशङ्क्य कार्यभेदं वदन्नविद्याकर्मणोरारम्भेऽत्यन्तं हि कर्म विकर्त्रेव केवलमाकारपरिणामावस्थाविशेषेष्वितिभाष्यार्थमाह । कर्मेति । कर्म हि सकामवासनं स्वस्य स्वफलस्य चाऽऽरम्भे स्वाश्रयस्य पुंसः सदैव विक्रियाहेतुरित्यर्थः । विज्ञानं परिच्छेत्रिति भाष्यं व्याचष्टे । इयत्तेति । वस्तुतोऽनवच्छिन्ने चिदात्मनि परिच्छेदमियत्ताशब्दितमारोप्य कर्त्राद्यात्मनाऽवस्थानं कल्प्यते तथाविधपरिच्छेदकारणमज्ञानमेव न कर्मादीत्यर्थः ॥ ९४ ॥

---

१ ख. °मिहोच्यते । २ क. °दन्विद्या° ।

सैषाऽविद्या परिच्छेत्री ययाऽयं परमात्मनः ॥
संसारित्वं परिच्छिन्नो विज्ञानात्मत्वमश्नुते ॥ ९५ ॥

सैषाऽविद्या परिच्छेदकं विज्ञानमिति भाष्यं व्याकुर्वाणो ज्ञानपदार्थमनूद्य तत्कार्यमाह । सैषेति ॥ ९५ ॥

निवृत्तो द्वैतविषयाद्यद्यप्येष तथाऽपि तु ॥
संसारावस्थ एवायं द्वैतत्वाद्ब्रह्मभेदतः ॥ ९६ ॥

पारिच्छेदैकज्ञानभावेऽप्याद्यसमुच्चयवशात्पुंसः संसाराद्यावृत्तेरद्वैतदृष्टिरनुपयुक्तेत्याशङ्क्य यस्मात्परिच्छिन्नः परमात्मनः पृथग्भूत आस्ते स एष संसारविषयस्थ एव द्वैतात्माऽस्य ब्रह्मणि लयः कर्तव्य इतिभाष्यार्थमाह । निवृत्त इति । संसाराद्यावृत्तोऽपि सत्यामविद्यायां तदवस्थ एव ब्रह्मणो विभक्तत्वेन द्वैतावस्थत्वादित्यक्षरार्थः ॥ ९६ ॥

यतोऽनवसितं वाक्यं पुमर्थानवसानतः ॥
प्रवर्तते पुरेवातो ब्रह्मण्यप्ययसिद्धये ॥ ९७ ॥

तस्य प्रलयः कर्तव्य इत्यनवसितार्थमेव वाक्यं प्रवर्तत आप्रलयादिति भाष्येण फलितमाह । यत इति । आद्यसमुच्चयानुष्ठानात्प्रागिवोर्ध्वमपि जीवस्य ब्रह्मणि लयपर्यन्तं पुमर्थासमाप्तेर्यतो वेदान्तवाक्यं न निराकाङ्क्षमतो ब्रह्मणि तल्लयहेत्वद्वयदृष्ट्यर्थं वाक्यप्रवृत्तिरित्यर्थः ॥ ९७ ॥

एकवाक्यत्वमेतस्माद्द्वैताद्वैतार्थवाक्ययोः ॥
मोहाध्वस्तेर्न चाशेषः पुरुषार्थः समाप्यते ॥ ९८ ॥

द्वैताद्वैतदृष्ट्योरेकवाक्यत्वमिच्छता कार्यभेदस्तयोरशक्यो वक्तुमित्याशङ्कायामित्येकवाक्यतेत्यस्यार्थमाह । एकवाक्यत्वमिति । एतस्माद्द्वैतदृष्टिफलावस्थस्याद्वैतदृष्टावधिकारादित्यर्थः । तत्फलावस्थस्य कृतार्थत्वं तन्नान्यत्राधिकार इत्याशङ्क्याऽऽह । मोहेति ॥ ९८ ॥

परिच्छेदं हि यत्कार्यं तदेव विनिवर्तते ॥
ध्वान्तोच्छित्तौ विकर्तृत्वं कर्मणस्त्वनुवर्तते ॥ ९९ ॥
आसङ्गश्च तथैवाऽऽस्ते ते एते सङ्गकर्मणी ॥
अनिवृत्ते सती भूयोऽविद्यां जनयितुं क्षमे ॥ ६० ॥
अविनिर्भागवृत्तित्वात्सर्वदैव परस्परम् ॥
न चाविशुद्धे द्वैतार्थे शक्यमद्वैतमीक्षितुम् ॥ ६१ ॥

ऐक्यदृष्ट्यैवाविद्योच्छेदात्तर्हि सर्वभावापत्तौ नार्थो द्वैतदृष्ट्येत्याशङ्क्याविद्योच्छेदे हि

१ क. °दकाज्ञा°। २ ग. °वाऽस्ति ते। 42709

परिच्छेदकं स्यान्निवृत्तं न तु कर्मणो विकर्तृत्वमासङ्गश्चेत्यस्यार्थमाह । परिच्छेदं हीति । परितश्छेदो यस्य तत्कार्यं तथेति यावत् । कारणनिवृत्तेः कार्यनिवृत्तिप्रसिद्ध्यर्थो हि-शब्दः । अज्ञानतज्जध्वस्त्या ब्रह्मभूतस्य कामकर्मणी कथं चिदवस्थिते अपि न कार्याय पर्याप्ते इत्याशङ्क्य ते आसङ्गकर्मणी अनिवृत्ते पुनर्विज्ञानं प्रयुञ्जीयातां तेषां परस्परेणा-विनिर्भागवृत्तित्वादित्यस्यार्थमाह । ते इति । अविनिर्भागवृत्तित्वात्कर्मासङ्गमिथ्याधियां त्रिदण्डविष्टम्भवन्मिथोबद्धत्वादित्यर्थः । कामादिध्वस्त्या भाव्यमन्यथा मुक्त्यनुपपत्तेरि-त्युक्तं तत्रैव हेत्वन्तरमाह । न चेति । यद्वा विनाऽपि कामादिध्वस्त्या स्यान्मुक्तेऽद्वै-तदर्शनादित्याशङ्क्याऽऽह । न चेति । उक्तं हि—न चाशुद्धेऽद्वैतदर्शनं शक्यमिति ॥ ५९ ॥ ६० ॥ ६१ ॥

इत्यादिपूर्वपक्षोक्तिदूषणेष्वभिधास्यते ॥
ग्रन्थभूयस्त्वसंत्रासान्नेह कृत्स्नोऽभिधीयते ॥ ६२ ॥

एवमुक्तायामनुक्तायां च समस्तव्यस्तमैकात्म्यमित्यादिकायां पूर्वपक्षस्वरूपायां भर्तृ-प्रपञ्चोक्तौ बहुषु दूषणेषु संभवत्स्वत्यल्पमेव तदुच्यते न सर्वं ग्रन्थभूयस्त्वभयादिति सिद्धान्तयति । इत्यादीति ॥ ६२ ॥

भूरि दूषणमत्रोक्तं श्रुत्या च स्वयमेव च ॥
पुरुषो वा इति ह्युक्त्या तथाऽस्मादिति वाक्यतः ॥ ६३ ॥

यत्तावदाद्यसमुच्चयानुष्ठानाद्द्वैतक्षय इति तत्राऽऽह । भूरीति । कथं श्रुत्या भर्तृप्रप-ञ्चैश्चास्मिन्पक्षे बहु दूषणमुक्तं तत्राऽऽह । पुरुष इति । पुरुषो वा अक्षितिरस्माद्ध्येवाऽऽ-त्मनो यद्यत्कामयते तत्तत्सृजत इत्यादिवाक्यैर्द्वैताक्षयवादिभिस्तानि व्याचक्षाणैश्च भर्तृप्र-पञ्चैरस्य पक्षस्य निरस्तत्वान्न द्वैतध्वस्तिराद्यसमुच्चितिफलमित्यर्थः । श्रुतिस्वव्याख्यावि-रोध्यर्थो नाङ्गीकारमर्हतीति हिशब्दार्थः ॥ ६३ ॥

कारणादक्षरादन्नं पुरुषेणेह कर्मणा ॥
अव्याकृतादिभावेन व्रीह्यादित्वाय जन्यते ॥ ६४ ॥

परपक्षस्य श्रुतिस्वोक्तिविरोधौ प्रपञ्चयितुं श्रौतं जगदक्षयं प्रकटयन्नादौ जन्मप्रकार-माह । कारणादीति । प्रागवस्थायामव्याकृतत्वेन ततो व्रीहियवादिभावेनोपभोगार्थं व्याकृतत्वेन स्थितमन्नं कूटस्थात्परस्मादज्ञातादुपादानात्कर्मणा निमित्तेन सृज्यते भोक्तु-रित्यर्थः । इहेति भोगभूमिग्रहः ॥ ६४ ॥

तत्रैवं सति यद्येतदद्यैतैव हि केवलम् ॥
न जन्यतेऽतः क्षीयेत न त्वेतन्नेह जन्यते ॥ ६५ ॥ ७।८।१४

---

१ ख. ॰वृत्तौ का॰ । २ क. तदाह ।

सृष्टेऽपीत्यमन्ने तस्य प्रत्यहं भक्ष्यमाणस्य कथमक्षतत्वं तत्राऽऽह । तत्रेति । तस्मिन्नन्ने दर्शितरीत्या सृष्टे सति प्रतिक्षणं भक्षणवत्तस्य सृष्टेरपि सत्त्वादक्षयसिद्धिरित्यर्थः । भोगस्य सर्गाविनाभावद्योती हिशब्दः ॥ ६९ ॥

नित्यं भुङ्क्ते यथैवान्नमात्मा वाग्देहबुद्धिभिः ॥
अक्षीणैः कर्मसंतानैस्तथैव जनयत्यपि ॥ ६६ ॥

अन्नसृष्टेर्भोगार्थत्वाद्भोगनियमवत्तत्सृष्ट्यनियमात्कुतोऽक्षयत्वमित्याशङ्क्याविनाभावं साधयन्नाह । नित्यमिति ॥ ६६ ॥

भूतानि क्षीयमाणानि कर्मणा परमात्मनः ॥
पुरुषेणेह जन्यन्ते तस्मात्स पुरुषोऽक्षितिः ॥ ६७ ॥

पुरुषो वा अक्षितिरिति वाक्यमत्र प्रमाणयति । भूतानीति । व्रीह्यादीनि प्रत्यहं भोगेन क्षीयमाणानि भोक्त्रा पुंसा भोगभूमौ परस्मादुपादानात्कर्मणा निमित्तेन यस्माज्जन्यन्ते तस्मादन्नाक्षये पुरुषो हेतुरित्यर्थः ॥ ६७ ॥

पूर्वकर्मोपभोगो यः पुरुषाणां शुभाशुभः ॥
तस्मादासङ्गवैशेष्यादन्यस्य प्रक्रिया पुनः ॥ ६८ ॥

अन्नाक्षये हेत्वन्तरमाह । पूर्वेति । जन्मान्तरीयकर्मप्रयुक्तो वर्तमानो भोगः सुखाद्यात्मको जन्तूनामन्यथाकृताभ्यागमादिप्रसङ्गात्तस्मादस्मिन्नपि भोगे सति समानजातीयविषयकामवैचित्र्यादनुष्ठानद्वारा भोगान्तरस्य जन्मेत्यर्थः ॥ ६८ ॥

तत्रैवं सति सासङ्गाः प्रायेण प्राणिनो यतः ॥
अतः कामाशयवशात्सृज्यतेऽन्नं मुहुर्मुहुः ॥ ६९ ॥

तथाऽपि कथमन्नाक्षयस्तत्राऽऽह । तत्रेति । तस्मिन्भोगे कामवैचित्र्याज्जायमाने सति बाहुल्येनाविदुषां तत्प्राधान्यात्तत्समूहानुसारेण पुनः पुनरन्नस्य सृज्यमानत्वादक्षयसिद्धिरित्यर्थः ॥ ६९ ॥

क्षीयन्तेऽन्याश्च भोगेन चीयन्तेऽन्याश्च कर्मणा ॥
भूतमात्राः प्रदीपस्य संतानेनार्चिषो यथा ॥ ७० ॥

कार्यकारणसंघातारम्भकभूतमात्राणां कार्यत्वात्क्षये भोक्तृत्वेन कर्तृत्वेन चेष्टस्य पुंसोऽपि क्षयात्रान्नाक्षय इत्याशङ्क्याऽऽह । क्षीयन्त इति । आरम्भकभूतमात्राणां प्रवाहात्मना सृष्टौ दृष्टान्तमाह । प्रदीपस्येति । तस्यार्चिषः संतानेनापचयोपचयवद्भूतमात्राणामपि तौ स्यातां भोक्तुश्चाकार्यत्वान्न क्षयाशङ्केत्यर्थः ॥ ७० ॥

परस्परात्तृभोज्यत्वसंस्कारोपनिबन्धनम् ॥
विज्ञानात्मभिरारब्धं बंभ्रमीत्यखिलं जगत् ॥ ७१ ॥

---

१ क. °वैशिष्ट्याद° । २ ख. दृष्टौ ।

जगज्जनको जीवः सृष्टं जगदुक्त्वा मुक्तश्चेत्कथं जगदक्षयोऽन्यथा मोक्षशास्त्राप्रामाण्यमित्याशङ्क्याऽऽह । **परस्परेति** । मिथोभोक्तृभोज्यत्वेन कामकर्मवासनाभिश्च युक्तं जगज्जीवैस्तद्वशादारब्धमतो जीवस्यैकस्य मोक्षेऽपि स्वप्नवदन्येषां स्रष्टॄणां सत्त्वादनिशमतिशयेन भ्राम्यति जगदिति तदक्षय इत्यर्थः ॥ ७१ ॥

**विज्ञानात्मा हि यः कश्चित्कर्मणा येन केनचित् ॥**
**साधिभूताधिदैवस्य जगतः सर्गकारणम् ॥ ७२ ॥**

कथमिदं जगज्जीवैरारब्धं सूत्रक्षेत्रज्ञस्यैकस्यैव बुद्ध्यादिशक्तिमतस्तदारम्भकत्वोपगमात्तत्राऽऽह । **विज्ञानेति** । यः कश्चिन्निकृष्टोऽपीति यावत् । येन केनचिदित्यप्रकृष्टेनापीत्यर्थः । क्षेत्रज्ञमात्रस्य जगत्सर्गकारणत्वं प्रागुक्तमिति वक्तुं हिशब्दः ॥ ७२ ॥

**श्रुत्यैतत्स्वयमेवोक्तं कर्म न क्षीयते यथा ॥**
**दैववागादिसंपत्तिस्तथा त्वन्नात्मदर्शिनः ॥ ७३ ॥**

कर्म प्रतिक्षणं क्षीयते तत्कथं तेन तज्जगत्सृष्टमित्याशङ्क्य न हास्येत्यादिश्रुतिमाश्रित्याऽऽह । **श्रुत्येति** । यथा कर्म न क्षीयते तथा स्वयमेव श्रुत्या तदेतदुक्तमिति संबन्धः । किंच सूत्रे त्वन्नात्मन्यहंग्रहोपासकस्य यद्दैवं वागादि जगदात्मकसूत्ररूपं तत्प्राप्तिः पृथिव्यै चैनमित्यादिनोच्यते सा च न क्षीयतेऽथैनमेते देवाः प्राणा अमृता आविशन्तीति श्रुतेरतो जगदक्षयसिद्धिरित्याह । **दैवेति** ॥ ७३ ॥

**इदं तत्तदिदं चेति त्रिषु कालेषु नित्यताम् ॥**
**प्राहास्य विद्यमानस्य विक्रियामात्रमेव तु ॥ ७४ ॥**

तद्धेदं तर्हीति व्याकृताव्याकृतसामानाधिकरण्यश्रुतिरपि जगदक्षयसाधिकेत्याह । **इदमिति** । प्रागपि जगतः सत्त्वे कथं तज्जगज्जन्मोक्तिस्तत्राऽऽह । **विद्यमानस्येति** । विक्रियाऽभिव्यक्तिः । असतो नोत्पत्तिरिति वक्तुं तुशब्दः ॥ ७४ ॥

**यद्यत्कामयते चास्मादविद्याकामकर्मणाम् ॥**
**ब्रह्मण्यवस्थितस्यापि त्वक्षयत्वं श्रुतिर्जगौ ॥ ७५ ॥**

अस्माद्ध्येवाऽऽत्मनो यद्यदित्यादिश्रुतिरपि जगदक्षये मानमित्याह । **यद्यदिति** । अस्मादात्मनो यद्यत्कामयते तत्तत्सृजत इति श्रुतिश्च ब्रह्मण्यवस्थितस्याप्यविद्यादीनामक्षयत्वं जगाविति संबन्धः ॥ ७५ ॥

**कृत्स्नमाप्त्या क्षयो नातो विद्यते कामकर्मणोः ॥**
**प्रमाणासंभवात्तस्मादसमीचीनमुच्यते ॥ ७६ ॥**

तदक्षये सिद्धे समुच्चयेन सूत्राप्त्या न कामादिध्वस्तिरिति फलितमाह । **कृत्स्नेति** ।

---

१ ख. ॰ता ॥ प्रागस्य ।

